7-1

श्रीसीतारामचन्द्र रटाटे स्मृति लेखमाला-२

# वेदतत्त्वविचार

संस्कृत-हिन्दी लेखद्वय विभूषित

श्री पं० नारायणशास्त्री रटाटे

श्रीसीतारामचन्द्र रटाटे स्मृतिभवन, वाराणसी

श्रीसीतारामचन्द्र रटाटे स्मृति लेखमाला

: २ :

# वेदतत्त्वविचार

संस्कृत-हिन्दी लेखद्वय विभूषित

लेखक

श्री पं० नारायण शास्त्री रटाटे

अथर्ववेदमार्तण्ड, वेदपण्डित, पुराणचर्चा प्रवीण

अथर्ववेदाध्यापक:-

निगमागम दरभङ्गा विद्यालय, वाराणसी

श्रीसीतारामचन्द्र रटाटे स्मृतिभवन, वाराणसी

१९८५

श्री स्व० आहिताग्नि वे० शा० सं० पं० रामचन्द्र शास्त्री रटाटे चतुर्वेदी, वैदिकचक्रवर्ती, सम्मानित प्राध्यापक वा० सं० वि० वि० वाराणसी के स्मृतिदिवस के उपलक्ष्य में ......

आविर्भाव ई० सन् १८७४ ] [ तिरोभाव ई० सन् १९६६

## ❀ ग्रन्थ-समर्पणम् ❀

निगमागमज्ञानपारावारपारीणानां धर्मधराधारणधौरेयाणां कर्मयोगविचक्षणानां कर्त्तव्यनिष्ठानां मानवधर्मतत्त्व-ज्ञातॄणां दयादाक्षिण्यादिगुणगणयुक्तानां सर्वभूत-समभावसहृदयानां राजर्षिपदवीविभूषितानां श्रीमतां माननीयमहामहिमराज्यपाल-
चन्द्रेश्वरप्रसादनारायणसिंह-
महोदयानां करकमलयोः
सादरं समर्पयामि—

नारायणशास्त्री खाटे

Phone { 54160 ffo
34170 Res.

श्री० डॉ० डी० एन० चतुर्वेदी
कुलपति
Prof. Dr. D. N. Chaturvedi
Vice-Chancelar

काशी विद्यापीठ, वाराणसी
KASHI VIDYAPITH,
Varanasi-221002

दिनांक २२-९-८४

पूज्य पं० नारायण शास्त्री रटाटे जी,

आपने पवित्रतम रचना हेतु अपनी पवित्र लेखनी से वेदतत्त्व विचार प्रारम्भ किया है। यह एक स्तुत्य एवं प्रशंसनीय कार्य है। आप इस राष्ट्र को ही नहीं अपितु विश्व को इन सब भारतीय अमूल्य रचनाओं से आज के युग के समस्त नागरिकों को अवगत कराने का प्रयास करें क्योंकि आज यह कार्य अत्यन्त आवश्यक है। वेदों और उपनिषदों की अमृत वाणी १८ पुराणों द्वारा यदि सारे विश्व को प्राप्त हो जाती तो विश्व शान्ति, विश्व बन्धुत्व एवं मानवता के सभी मूल्यों की रक्षा हो सकेगी। इस पुनीत कार्य के लिए मैं आपको साधुवाद देता हूँ और राष्ट्र के समस्त विद्वानों, मनीषियों सत्ताधारियों और सम्पत्तिधारियों से निवेदन करता हूँ कि उनके द्वारा श्री रटाटे जी को सभी प्रकार के साधनों से सम्पन्न किया जाना चाहिए।

मैं आपकी विद्वत्ता से बहुत प्रभावित हूँ और मंगलकामना की पुष्पांजलि अर्पित कर रहा हूँ।

आपका,

(डी० एन० चतुर्वेदी)

पं० नारायण शास्त्री रटाटे
'अथर्ववेदमार्तण्ड' अथर्ववेदाध्यापक,
दरभंगा विद्यालय,
वाराणसी।

श्री राज्यपाल

राज भवन
लखनऊ
फरवरी ५, १९८५

उत्तर प्रदेश

## सन्देश

वेद का अर्थ है ज्ञान। हमारे वेदों और अन्य वैदिक साहित्य में ज्ञान का अथाह भण्डार सुरक्षित है। मानव मात्र की उन्नति एवं उसके कल्याण के लिये इस ज्ञान के व्यापक स्तर पर प्रचार-प्रसार की आवश्यकता है। विशेषतः आज के सन्दर्भ में जब समाज में हर ओर बिखराव दृष्टिगोचर हो रहा है उस बिखराव को समेटने में वैदिक ज्ञान अत्यधिक सहायक सिद्ध हो सकता है।

पण्डित नारायण शास्त्री रटाटे ने हिन्दी और संस्कृत में "वेद तत्व विचार" की रचना करके हिन्दी और संस्कृत भाषा-भाषी लोगों में वैदिक ज्ञान के प्रचार-प्रसार की दिशा में जो पहल की है उसके लिये मैं उन्हें बहुत-बहुत साधुवाद देता हूँ।

प्रकाशन की सफलता के लिये मेरी शुभ-कामनाएँ।

(हस्ताक्षर)

॥ च० प्र० ना० सिंह ॥

॥ श्रीः ॥

# ❀ उपक्रमः ❀

आज महान हर्ष का विषय है कि सीताराम चन्द्र-स्मृति-लेख माला' का द्वितीय पुष्प" वेद तत्त्व विचार प्रकाशित हो रहा है। मात्र एक महान् आश्चर्य भी है कि अठारहवें वर्ष में द्वितीय पुष्प प्राप्त हो रहा है, इसका कारण है–'स्वयंदासास्तपस्विनः'। अपने कर्तव्य का पालन अपने को ही करना है। आज भारतीय संस्कृति का स्तर गिरता जा रहा है जिस संस्कृति का आधार है 'ज्ञान'। हम ज्ञान-हीन होने से नैतिक पतन की तरफ बढ़ रहे हैं, मानव धर्म को भूल रहे हैं, ज्ञान के कारण ही मानव संसार में श्रेष्ठ है, देवता भी ज्ञान की प्राप्ति के लिए मानव देह की इच्छा करते हैं, जिसके द्वारा मोक्ष प्राप्त होता है। परन्तु, आज मानव ज्ञान-हीनता के कारण पशु से भी नीचे गिर रहा है—

'निद्रादिमैथुनाहाराः सर्वेषां प्राणिनां समाः ।
ज्ञानवान् मानवः प्रोक्तो ज्ञानहीनः पशुः स्मृतः' ॥२६॥
(सारोद्धार अ. १६ प्रेतकल्प)

आहार, निद्रा, भय, मैथुन ये सभी प्राणियों में एक समान हैं, परन्तु ज्ञान के कारण ही मनुष्य श्रेष्ठ है। ज्ञान-हीन को ही पशु कहते हैं। आज इन्हीं चार बातों के वशीभूत होकर महान मानव जीवन का नाश कर कर्त्तव्यकर्मच्युत हो रहा है। आज मानव रूप वृक्ष, प्रकृति के विकास रूप झंझावात से आघातित हो रहा है, इससे सुरक्षित होने का एक ही उपाय है जैसे–'आँधी आवे बैठ गमावे'।

मानव वृक्ष को धराशायी होने से बचाने में सुरक्षा का महान साधन है—आचार-विचार-आहार तथा विहार। सदाचार से सद् विचारों की प्राप्ति होती है, उससे सद् व्यवहार बनता है। सात्विक आहार (खान-पान) से काम-भोगादि पर नियंत्रण होता है, जिससे अच्छे संस्कार होते हैं। योग्य संस्कारों से संस्कृत हो मानव श्रेष्ठ आर्यसंस्कृति का निर्माण करने में सफल होता है और एक महान मार्गदर्शक बनता है—

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।'
'महाजनो येन गतः स पन्थाः'।

इसका मूल है आचार—

'सर्वागमानामाचारः प्रथमं परिकल्पते।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१३७॥
(श्री. वि. स. ना. स्तो.)

सर्वशास्त्रों में आचार ही प्रथम माना जाता है। आचार से ही धर्म की उत्पत्ति होती है और धर्म का स्वामी भगवान अच्युत हैं। "वेदतत्वविचार' मानव के लिए 'ज्ञान' प्रदायक होकर सुख, शान्ति, तथा कल्याण का महान साधन सिद्ध होता है।

अन्त में ग्रन्थ के प्रेस कापियाँ आदि बना कर मुद्रणोपयोगी बनाने वाले डॉ० ज० गं० रटाटे एम० ए० साहित्याचार्य एवं गोपाल रटाटे अथर्ववेद शास्त्री को हार्दिक आशीर्वाद प्रदान करता हूँ तथा इसके मुद्रक ज्योतिष प्रकाश प्रेस के संचालकों को धन्यवाद देता हूँ।

पं० नारायण शास्त्री रटाटे
के० २२।४८, दुर्गाघाट
वाराणसी

चैत्र शुक्ल ५ मी संवत् २०४२

# संस्कृतविषयानुक्रमणिका



# हिन्दीविषयानुक्रमणिका

❀ श्रीः ❀

# वेदतत्त्वविचारः

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

वेदा एव अखिलस्य ब्रह्माण्डस्य आधारः। अस्माकं धर्मस्य, राजनीतेः, सामाजिकव्यवहारस्य, शिक्षा-दीक्षादीनामपि आधारः वेदा एव सन्ति। वेदतत्त्वस्य विज्ञानाय अस्माभिः त्रिकोणात्मकरूपेण विचारः करणीयः। वेदाः, वैदिकाः जनाः ॥ वैदिकधर्मश्च इतीदं त्रिकोणात्मकं रूपम्।

( १ ) वेदस्वरूपम्—

अनन्ता वै वेदाः ॥ तै० ब्रा० ३।१७।११ ॥ अनेन ब्राह्मणवचनेन इदं स्पष्टं भवति यत् वेदाः अनन्ताः। वेदानां वेदत्वमपि पिप्पलादश्रुत्या प्रमाणितं भवति। तद् यथा—"वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति" ॥ पिप्पलादश्रुतिः ॥ इन्द्रियैः लौकिकेन शरीरेण वा ये स्वर्गादयो लोकाः न सुलभाः ते वेदोक्तेन उपायेन सारल्येन लब्धुं शक्यन्ते। यच्च ब्रह्मतत्त्वं अन्यैः लौकिकैः उपायैः मनसा वाचा च न सुलभं तदपि वेदोक्तेनैव ज्ञानेन प्रत्यक्षविषयं भवति। वेदस्वरूपविषये आपस्तम्बपरिभाषा कथयति—"मन्त्रब्राह्मणयोर्वेदनामधेयम्" ॥ आपस्तम्बपरिभाषा १।३३ ॥ न्यायसूत्रं वेदस्य महिमानम् एवं वर्णयति "य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति" ॥ न्या० सू० ४।१।६२ ॥ मन्त्रभागः ब्राह्मणभागश्च इति द्वयमपि अनादिकालादेव सर्वैः प्रमाणं मन्यते। "वेद शास्त्र द्वयं चैव प्रमाणं तत्सनातनम्" ॥ म० भा० १२।३०५।७ ॥ वेदा एव ब्रह्मणः शब्दात्मकं रूपम्। अत एव श्रीमद्भागवते काशीरहस्ये च उक्तम्—शब्दब्रह्म परंब्रह्म ममोभे शाश्वती तनू। ॥ श्री०

भा० ६।१६।२१ ॥ "शब्द ब्रह्म ब्रह्ममूलं वदन्तः" ॥ तत्रत्या टीका—शब्दब्रह्म—वेदः प्रणवो वा ब्रह्ममूलं = ब्रह्मप्रापकः ॥ काशीरहस्य-३।४४ ॥ वयं भारतीयाः वेदान् एव सर्वेष्वपि प्रमाणेषु प्रधानतमं मन्यामहे । यत् किमपि वेदैः उक्तं तत् सर्वम् अस्माकं कृते प्रमाण-रूपम् । यत्र कुत्राऽपि अन्येषुग्रन्थेषु प्रत्यक्षं वेदविरुद्धं वचनम् उपलभ्यते तत्र वेदविरुद्धत्वात् तद वचनम् अप्रमाणं भवति । वेदानां शाखा-भेदविषये इदं महाभाष्यवचनं—नित्यानिच्छन्दांसीति यद्यप्यर्थो नित्यो यात्वसौ वर्णानुपूर्वी साऽनित्या तद्भेदाच्चैतद्भवति काठकं, कालापकं मौदकं पैप्पलादकमिति । महाभाष्यम् । अनेन स्पष्टं भवति यत् तासु-तासु, काठक, कालापकादिशाखासु उपलभ्यमाना वर्णानुपूर्वी यद्यपि भिन्ना तथापि तद्गतः अर्थः सर्वत्र अभिन्नः नित्यश्च । अतएव शाखारूपः विकल्पः यत्र तत्र दरीदृश्यते । अस्य इदमेव कारणं यत् मन्त्रद्रष्टारः पुरातनाः ऋषयः यं यं मन्त्रं यादृग्रूपं दृष्टवन्तः तं तं मन्त्रं तादृग्रूपेणैव स्वशिष्यान् पाठितवन्तः । तमेव च पाठम् अनु-सृत्य तस्यां शाखायां ते ते मन्त्रा इदानीमपि तेनैव रूपेण वेदविदुषां मुखात् निर्गच्छन्ति । यथा—काण्वशाखायां विजुगुप्सते ॥ ईशावास्य० ४०।६ ॥ इति शब्दः मन्त्रे श्रूयते, किन्तु माध्यन्दिनशाखायां विचिकि-त्सति ॥ ईशावास्य० ४०।६ ॥ इति शब्दः मन्त्रो श्रूयते । उभयोरपि एतयोः शब्दयोः आकारे यद्यपि भेदः अस्ति, तथापि अनयोः उभयो-रपि अर्थः एकएव । अतएव भेदः अनित्यः अभेदः नित्यः ।

सर्वास्ताहि चतुष्पादाः सर्वाश्चैकार्थवाचकाः ।
पाठान्तरे पृथग्भूता वेदशाखा यथा तथा ।
प्राजापत्याश्रुतिर्नित्या तद्विकल्पास्त्विमे स्मृताः ॥

॥ वा० पु० ६१।५९।७५ ॥

एवं तत्च्छाखारूपेण विद्यमानाः चत्वारोऽपिवेदाः अपौरुषेयाः अनादयश्च । अस्मिन् विषये भट्टपादैः स्वीये तन्त्रवार्तिकग्रन्थे वेदा-नाम् अपौरुषेयत्वं साधयितुम् अनेकाः युक्तयः उपस्थापिताः सन्ति । तासु काश्चन इमाः सन्ति—

आदि वाक्यमपि श्रुत्वा वेदानां पौरुषेयता। न शक्याऽध्यवसातुं हि मनागपि सचेतनैः। तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते। महेश्वरेण ब्रह्मणः हृदये वेदविषयिणी प्रेरणा उत्पादिता तदनुरूपं ब्रह्मणः चतुर्भ्यः मुखेभ्यः प्रथमा वेदवाणी निरगात् सा वेदरूपा वाक् नित्या अपौरुषेया अनादिश्च "अतएव नित्यत्वम्। ॥ उ॰ मी॰ १।१३।२९ ॥ एवं सुस्पष्टं भवति यत् पुरुषकृतप्रयत्नं ब्रह्मकृतप्रयत्नं च विनैव वेदाः प्रतिकल्पं ब्रह्मणः मुखात् उपस्थिताः भवन्ति, अतएव नित्याः अनादयः अपौरुषेयाश्च।

## (२) वैदिकस्वरूपम्–

यः जनः वेदप्रामाण्यं मन्यते सः वैदिकः यश्च वेदम् अधीते तदर्थं जानीते वा सोऽपि वैदिकः। इदं वेदाध्ययनमपि गुरुपरम्परया लब्धं सत् सिद्धिं प्रयच्छति, नान्यथा। यदि कश्चित् जनः गुरुपरम्परां विहाय स्वतन्त्ररूपेण स्वबुद्धिचातुर्येण पाठशक्त्या वा वेदम् अधीते तर्हि सः तेन वेदाध्ययनेन वेदतत्त्व ज्ञातुं योगसिद्धिं वा प्राप्तुम् नार्हति। अतएव ऋग्वेदे उक्तम्—

> यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
> यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्॥
>
> ऋ॰ वे॰ १०।७१।६

यो मानवः वेदरूपं मित्रं परित्यजति सः इहलोके परलोके वा साफल्यं न भजते। अतः गुरुपरम्परया वेदाध्ययनं कुर्वन् एव द्विजः वास्तविकः वैदिकः। वेदतत्त्वस्य प्राप्तये योगसिद्धीनां प्राप्तये वा योगशास्त्रे अनेकानि साधनानि निरूपितानि सन्ति। तेषु साधनेषु वैदिकधर्मस्य आचरणं प्रधानं साधनं वर्तते।

## (३) वैदिकधर्मः–

अथ कोऽयं वैदिकधर्मः इति जिज्ञासायां इदमुच्यते। धारणार्थकात् धृञ्धातोः मनिप् प्रत्यये कृते "धर्म" शब्दः निष्पन्नो भवति। धर्मशब्दस्य "धारणात् धर्ममित्याहुः" धारयतीति धर्मः", "वेदप्रणि-

हितो धर्मः "इत्याद्याः अनेकाः परिभाषाः तैस्तैराचार्यैः कृताः सन्ति। अतएव वेदेन कर्त्तव्यतया निरूपितानि कर्माणि धर्मकोटौ आयान्ति। एवमेव वेदानुसारिस्मृतिग्रन्थेषु पुराणग्रन्थेषु च यानि कर्माणि कर्त्तव्यतया निर्दिष्टानि सन्ति, तान्यपि सर्वाणि धर्मरूपेण स्वीक्रियन्ते। यानि च कर्माणि तद्विरोधीनि तानि सर्वाणि धर्माभासरूपाणि अधर्मकोटौ प्रविशन्ति। अतएव उक्तं श्रीमद्भागवते- "वेदप्रणिहितो धर्मः अधर्मः स्तद्विपर्ययः" अन्यत्राऽपि–श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते। तत्र श्रौतं प्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा। व्यासस्मृति १।४॥ विरोधेंत्वनपेक्षंस्यादसतिह्यनुमानम्" । ॥ पूर्वमीमांसा १।३।३॥ कुतुहलवृत्तौ-प्रत्यक्षश्रुतिविरोधे सति अनपेक्षं श्रुतिवाक्यमेव प्रमाणं स्यान्नतुस्मृतिवाक्यम्। "धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्" ॥ पू॰ मी॰ १।३।१॥ वैदिकधर्मविषये ऋग्वेदे नचिकेता कथयति–

"न किर्देवा मिनी मसि न कियायोपयामसि मन्त्रश्रुत्यं चरामसि पक्षेभिरपि कक्षेभि रत्राभि संरभामहे॥ ऋ० वे० १०।१३४।७॥ हे देवाः वयं भवद्विषये न कामपि त्रुटिं कुर्मः। कस्मिन्नपि कर्मणि विलम्बम् अश्रद्धां वा न कुर्मः, मन्त्रानुसारं ब्राह्मणग्रन्थानुसारं च आचरणं कुर्मः, हस्तयोः एकत्रीकृतां यज्ञसामग्रीं गृहीत्वा स्वर्गसोपानरूपं यज्ञकर्म सम्पादयामः। ऐतरेयारण्यके उक्तम्-"एष पन्था एतत्कर्मतद्ब्रह्मैतत्सत्यम्। तस्मान्न प्रमाद्येतन्नातीयात्। न ह्यन्त्यायन्पूर्वे येऽत्यायस्ते परावभूवुः।" ॥ ऐ० आ॰ २।१।१॥ अयं वैदिकः अनादिमार्ग एव इहलोके परलोके च कल्याणकारी वर्तते। अयमेव कर्ममार्गः, उपासनामार्गः, ज्ञानमार्गश्च। चतुर्षु अपि ऋग्वेदयजुर्वेदसामवेदाऽथर्ववेदेषु क्रमेण ज्ञानविषये कर्मविषये, उपासनाविषये विज्ञानविषये च वर्णनम् अस्ति। अतएव अस्मिन् परम्परागते वैदिकधर्माभिधाने वैदिकमार्गे शुष्कस्तर्कः प्रमादो वा न करणीयः। अस्य मार्गस्य कदापि परित्यागोऽपि न करणीयः। पूर्वैः गोत्रप्रवर्तकैः भृग्वङ्गिरोवसिष्ठकश्यपनामकैः ऋषिभिः तत्सन्तानैः कविबृहस्पतिदध्यङ्वामदेवप्रभृतिभिः ऋषिभिश्च अयं वैदिकोमार्गः कदापि न परित्यक्तः। अतः

तत्सन्तानैः अस्माभिरपि सः मार्गः कदापि न परित्याज्यः। अस्य वैदिकमार्गस्य आचरण एव अस्माकं सर्वविधं कल्याणम्। इतिहासः साक्षी विद्यते यत् यैर्यैर्जनैः वैदिकमर्यादायाः उल्लंघनं कृतं त्यागो वा कृतः ते सर्वे अनार्याः सन्तः हीनाः सन्तः महत् कष्टम् अनुभूय पराभवं प्राप्नुवन्तिस्म। वैदिकधर्मस्य अयमेव सारांशः यत् कदाऽपि अस्य वैदिकधर्मस्य परित्यागः न करणीयः सतां सेवा करणीया, कामक्रोधादयः शत्रवः जेयाः, अन्यस्य गुणानां दोषाणां वा चर्चा न करणीयाः, सत्यभाषणं विधेयं, हिंसा परित्याज्या, अग्नेः, सूर्यस्य, वरुणस्य, शिवस्य, वासुदेवस्य, दुर्गायाः, गणपतेश्च सेवास्मरणादिकं करणीयं नश्वरे देहे ममता परित्याज्या, संसारविषयिणी आसक्तिः हेया, सर्वथा तदेव कर्म आचरणीयं यत् वेदैः उपदिष्टं यद्वा अविगीतैः शिष्टैः आचरितम्। यदि कश्चन मानवः स्वीयां वास्तविकीम् उन्नतिं कामयते तर्हि तेन अस्य वैदिकधर्मापरपर्यायस्य वैदिकमार्गस्य अनुसरणम् अवश्यमेव करणीयम्। अतएव उक्तं--"यद्वैकिंचनमनुरवदत्तद्भेषजम्" तै० शा० २।२।१०।२ ॥

## (४) वैदिकराजनीतिः--

वैदिक राजनीतेः स्वरूपमथर्ववेदे एव वर्णितमस्ति।

सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने।
येना संगच्छा उपमा स शिक्षाच्चारु वदानि पितरः संगतेषु ॥

विद्म ते सभे नाम नरिष्टा नाम वा असि।
ये ते के च सभासदस्ते मे सन्तु स वाचसः ॥

एषामहं समासीनानां वर्चो विज्ञानं मा ददे।
अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥

यद्वो मनः परागतं यद्बद्धमिह वेह वा।
तद्व आ वर्तयामसि मयि वो रमतां मनः ॥

॥ अ० वे० ७।१।१२ ॥

सभा विदुषां समाजः

हे सभे ते तव नाम नामधेयं विद्म जानीमः। "विदोलटो वा" ३।४।८३।। इति मसो मादेशः। तन्नाम दर्शयति—हे सभे नाम नाम्नेति यावत्। नरिष्टा रिषिणात्कान्तेन नञ् समासः अहिंसिता परैरनभिभाव्या। एतन्नामिका असि वै भवसि खलु। एकस्य वचनम् अन्यैराद्रियते तिरस्क्रियतेऽपि। बहवः संभूय यद्येकं वाक्यं वदेयुस्तद्धि न परैरतिलङ्घ्यम्। अतः अनतिलङ्घ्यवाक्यत्वाद् नरिष्टेति नाम सभाया युज्यते।

अस्मिन् सूक्ते सभा कीदृशी भवेत् इति सभास्वरूपम् ऋषिणा निर्दिष्टम्। तन्मतानुसारं सभा द्विविधा-ग्रामसभा राष्ट्रसभा च अनयैव रीत्या नगरानुसारं नगरसभा प्रान्तानुसारं राष्ट्रसभा भवेत्। एताः सर्वाः सभाः तस्य-तस्य राष्ट्रभागस्य कार्यं सम्पादयेयुः। राजा। शासकः। प्रजानां पालनं तथैव कुर्यात् यथा कश्चन पिता स्वपुत्रान् पालयति। पूर्वोक्तं सभाद्वयम् एकमतं सत् राष्ट्रस्य कार्यं कुर्यात्। सभासदः सत्यवादी भवेत्, योग्यां सम्मतिं दद्यात्, राजा अपि तेषु सभासत्सु विश्वासं कुर्यात्। अथर्ववेदे सभायाः अपरः पर्यायः नरिष्टा अस्ति। –"नरिष्टा नाम वै असि" अनेन नाम्ना इदं स्पष्टं भवति यत् सा सभा नराणाम् इष्टा तथा तत्रत्याः नेतारः अपि नराणाम्। जनतायाः। इष्टाः स्युः। सभा प्रजायाः राष्ट्रस्य वा नाशाय न भवेत्। न–रिष्टा। अपितु रक्षणाय कल्याणाय च भवेत्। अस्य पूर्वनिर्दिष्टस्य वेदवाक्यस्य अयमपि अर्थः यत् यः राजा जनमतम् अनुसृत्य कार्यं करोति सः सदैव सुरक्षितो भवति। पूर्वोक्ते राजसभासूक्ते वैदिकशासनपद्धतेः सिद्धान्तः वर्णितः अस्ति। अस्य सूक्तस्य अयमेव तात्पर्यार्थः यत् वैदिकपद्धत्या वैदिकराजनीतेः वैदिकधर्मस्य च अनुसरणेन च राष्ट्रस्य कल्याणं भवति "चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेकोवाध्यात्मवित्तमः। ।। या० स्मृ० १।९ ।। "यद् आर्याः प्रशंसन्ति स धर्मः"।

।। आप० ध० १।२०।७ ।।

(५) सामाजिकः समभावः व्यवहारः एकता च—

समाजे केन व्यवहारेण एकतायाः समग्रे राष्ट्रे अखण्डतायाः च रक्षा भवितुमर्हति इत्यस्मिन् विषये अथर्ववेदे उक्तं—

संजानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम्।
देवाभागं यथापूर्वं संजानाना उपासते ॥

॥ अ० वे० का० ६।७।६४ ॥

हे साम्मनस्य कामा जनाः यूयं संजानीध्वं समानज्ञानयुक्ता भवत। ज्ञानस्य सर्वव्यवहारमूलत्वात् तद्विगानाभावः, प्रथमं प्रार्थयते। ज्ञा अवबोधने "संप्रतिभ्यामनाध्याने" ॥ पा: १।३।४६ ॥ इति आत्मनेपदम्। "ज्ञा जनोर्जा" ॥ पा० ७।३।७९ ॥ इति जा आदेशः एवम् समानज्ञानाः सन्तस्ततः सं पृच्यध्वां संपृक्ताः संसृष्टकार्या भवत। पृचीसम्पर्के। सामानज्ञानत्वसिद्धये तत्करणस्यापि एकविषयतां प्रार्थयते। वः युष्माकम् मनांसि ज्ञानोत्पत्तिनिमित्तानि अन्तःकरणानि सं जानताम्। समानम् एकविधम् अर्थं जानन्तु। परस्पर विरुद्धज्ञानजनकानि मा भूवन्नित्यर्थः।

समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम्। समानेन वो हविषाजुहोमि समानं चेतो अभिसंविशध्वम् ॥ २ ॥ मन्त्रः गुप्तभाषणं, कार्याकार्यपर्यालोचनात्मकम् तदपि समानः एकरूपो भवतु। मन्त्रिगुप्तभाषणे। अस्माद् भावे घञ्ञित्यादिर्नित्यम्' ॥ पा० ६।१।१६७ ॥ इति आदिरुदात्तः। तथा समितिः संगतिः कार्येषु प्रवृत्तिः सापि समानी एकरूपाभवतु।

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ३ ॥

हे साम्मनस्य कामाः वःयुष्माकम् आकूतिः संकल्पः समानी एकरूपा भवतु समानीमय। ३। अस्य मन्त्रितार्थः—सर्वैः सह समान स्थानम् आश्रयणीयं, समानतया परस्परं सम्बन्धः स्थापनीयः, अस्माकं मनः

समानतया युक्तं भवेत्, अस्माकं विचाराः समाना भवेयुः, सर्वेषां कृते सभा समानास्यात्], सर्वेषां व्रतं समानं भवेत्, सर्वेषां चित्तं समानं भवेत्, सर्वे एकमताः स्युः, सर्वे समानरूपेण प्रत्येकं कार्ये भागं गृह्णीयुः, सर्वेषां संकल्पः समानः भवेत्, सर्वेषाम् अन्नस्य, जलस्य च भागः समानः भवेत्, सर्वेऽपि समाने सम्बन्धेयुक्ताः सन्तः समानरूपेण ईश्वरस्य उपासनां कुर्युः, यथा चक्रस्य अराणि नाभौ संयुक्तानि भवन्ति तथैव सर्वे समाजे परस्परं संयुक्ताः भवेयुः, परस्परं सहयोगं च कुर्युः।

समानी प्रपा सहवोऽन्नभागः समाने योक्त्रे सहवो युनज्मि।

॥ अ० ३।६।३।६ ॥

हे साम्मनस्य कामाः वः युष्माकम् समानी एका प्रपा पानीयशाला भवतु। अन्नभागश्च सह एव भवतु। परस्परानुरागवेशेन एकत्रावस्थितम् अन्नपानादिकं युष्माभिरुपभुज्यताम् इत्यर्थः। तदर्थम् अहं वः युष्मान् समाने योक्त्रे एकस्मिन् वन्धने स्नेहपाशे सहयुनज्मिसह वध्नामि। अपि च सम्यञ्चः सङ्गताः एकफलार्थिनो भूत्वा समानज्ञानाः सन्तः अग्निं सपर्यत। सपर पूजायाम्।

(६) शिक्षा दीक्षा च—

कृष्णयजुर्वेदस्य तैत्तिरीयशाखायां शिक्षावल्यां गुरुणा स्नातकाय उपदेशः दीयते।

ॐ शिक्षां व्याख्यास्यामः। वेदमनूच्याचार्यो ऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मंचर। स्वाध्यायान्माप्रमदः। आचार्यायप्रियधनमाहृत्य प्रजा तन्तुं मा व्यवच्छेत्सीः। सत्यान्नप्रमदितव्यम्। धर्मान्न प्रमदितव्यं। कुशलान्न प्रमदितव्यं। भूत्यै न प्रमदितव्यं। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं। देवपितृकार्याभ्यां न प्रमदितव्यं। मातृदेवो भव। पितृदेवोभव। आचार्यदेवोभव। अतिथिदेवोभव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि। तानित्वयोपास्यानि। नो इतराणि येकेचास्मच्छ्रेया

सो ब्राह्मणाः । तेषां त्वयासनेनप्रश्वसितव्यं । श्रद्धयादेयं । अश्रद्धयाऽदेयं । श्रियादेयं । ह्रियादेयं । भियादेयं । संविदादेयं । अथयदितेकर्मविचिकित्सावा वृत्तविचिकित्सावा स्यात् । ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः । आलूक्षाधर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ताआयुक्ताः । अलूक्षाधर्मकामास्युः । यथा ते तेषु वर्तेरन् । तथातेषुवर्तेथाः । एषआदेशः । एषउपदेशः । एषावेदोपनिषत् । एतदनुशासनं । एवमुपासितव्यं । एवमुचैतदुपास्यं । इतिशिवोपनिषत् । गुरुः स्वीयं शिष्यं सर्वश्रेष्ठं कर्माचरणं कर्तुं योग्यं सम्पादयितुं च उपदिशति । यत् त्वां सदा सत्यं वद, धर्मस्याचरणं कुरु, सर्वदा अध्ययने सावधानो भव, सत्ये धर्मे वेदशास्त्रयोः प्रवचने देवपितृकार्ये च प्रमादं मा कुरु, मातापित्रोर्गुरोश्च सेवां कुरु, अतिथीनां सेवां कुरु, अस्माकमपि यानि निन्दनीयानि कर्माणि तेषामनुकरणं मा कुरु, अनया रीत्या गुरुः शिष्यं तथा उपदिशति यथा परिवारार्थं समाजार्थं राष्ट्रार्थं च स्वजीवनम् उपयोगि सम्पादयेत् ।

गुरुः स्नातकं शिष्यं ज्ञानदीक्षया दीक्षितमपि करोति । सः तस्य समग्रां दूषितां प्रवृत्तिं निराकृत्य तं समाजोपयोगिनं भवितुं प्रेरयति । सःशिष्योऽपि गुरूपदेशतः तथा निष्ठावान् भवति यथा सःसामाजिकः सन् समाजस्य उपकार सम्पादयति । इयमेव वैदिकी शिक्षा दीक्षा च ।

## (७) उपसंहारः—

वर्तमानसमये प्रत्येकं मानवः प्रायः कष्टम् अभावम् अशान्तिं च अनुभवन् वर्तते । प्रत्येकं मानवस्य हृदयम् उद्वेलितम् आन्दोलितम् उद्विग्नम् अस्थिरं च भवत् अस्ति । अस्य सर्वस्य किं कारणं इति अन्वेषणे कृते इदमेव कारणं प्रतीयते यत् अस्माभिः वैदिकमार्गाऽपरपर्यायायाः भारतीयसंस्कृतेः उपेक्षा कृता । अस्माभिः सदाचारस्य सद्विचारस्य च परित्यागः कृतः अस्माक विवेकशक्तिः क्षीयमाणा वर्तते । वयम् मानवतां मानवधर्मं च विस्मृत्य उन्मत्ताः भ्रान्ताश्च

सन्तः विमार्गगाः जाताः स्मः। अस्माभिः यमनियमादीनां उपेक्षा कृता अस्माकम् आहारविहारव्यवहाराविकृताः जाताः सांसारिकी स्थितिरपि विकृता जाता सर्वत्र अतिवृष्ट्यनावृष्टि, शलभ, मूषक, शुक, स्वचक्र, परचक्र, भयाद्या ईतयः प्रसृताः भवन्ति। प्रत्येकं मनुष्यः नीतिं नैतिकतां च विहाय अनैतिकः भवन् अस्ति। उक्तं च–'नृणां-नीति परित्यागाद् विपाकाःस्युर्भयंकराः" अस्याः समग्रायाः दुःस्थितेः तरणाय केवलं भारतीयवैदिकसंस्कृतेः सुरक्षा एव परमोपायः अस्ति। वैदिकधर्मस्य वैदिकपरम्परायाः च अनुसरणेन प्रचारेण च वयं सर्वे संकटेभ्यः मुक्ताः सन्तः सुखं शान्तिं च प्राप्तुं शक्नुयाम। राष्ट्रस्य च कल्याणं अनैव रीत्या भवितुमर्हति। वेदाः स्वयमेव अस्मिन् विषये स डिण्डिमघोषं कथयन्ति–

॥ १ ॥ वेदोक्तं कर्म—

अभ्यसश्च व्यचसश्च बिलं विष्यामिमायया।
ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे ॥

॥ २ ॥ प्रियत्वं–

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥

॥ ३ ॥ कल्याणं–

भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसं नयन्तु ॥

॥ ४ ॥ सखं–

शं नो वातो वातु शं नस्तपतु सूर्यः।
अहानि शं भवन्तु नः शं रात्री प्रतिधीयतां
शंमषा नो व्युच्छतु ॥ १ ॥

❀ श्रीः ❀

# वेदतत्त्वविचार

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

वेद ही अखिल ब्रह्माण्ड के आधार हैं। हमारा धर्म, राजनीति सामाजिक व्यवहार एवम् शिक्षा-दीक्षा का आधार भी वेद ही है। वेदतत्त्व को जानने के लिये हमें त्रिकोणात्मक रूप से विभाग कर विचार करना होगा। वेद, वैदिक, वैदिक-धर्म यह त्रिपुटी है।

(१) वेद क्या है –

"अनन्ता वै वेदाः" ॥ तै० ब्रा० ३।१७।११ ॥ वेद अनन्त है और वेद का वेदत्व भी विशेष कारण से सिद्ध है। "नेन्द्रियाणि नानुमानं वेदाध्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति" ॥ पिप्पलादश्रुतिः ॥ नेत्र, मन आदि इन्द्रियाँ और अनुमान आदि प्रमाण जिस स्वर्गादि ब्रह्मलोक में नहीं पहुंचते उस अलौकिक अदृष्ट उपाय को वेद ही जानता है। इस लिये वेद का वेदत्व है। "मंत्र, ब्राह्मणयोर्वेद नामधेयम्" ॥ आपस्तम्ब परिभाषा १।३३ ॥ "मन्त्र और ब्राह्मण भाग का नाम वेद है। "य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति" ॥ न्यायसूत्र ४।१।६२ ॥ जो भरद्वाज, वशिष्ठ, विश्वामित्र आदि ऋषि मंत्र भाग और मंत्र भाग के कठिन अर्थरूप ब्राह्मण भाग के द्रष्टा हैं, वे ही इतिहास, पुराण और धर्मशास्त्र के भी प्रवक्ता हैं। "वेदशास्त्रद्वयं चैव प्रमाणं तत्सनातनम्" ॥म०भा० १०।३०५॥ मंत्र भाग और ब्राह्मण भाग ये दोनों ही अनादिकाल से प्रमाण माने जाते हैं। वेद प्रमाण मानने वाला ही वैदिक है। "सर्वे शब्दाः सर्वार्थवाचकाः। शब्दप्रमाणका वयम् यच्छब्द आह तदस्माकं प्रमाणम्" ॥ महाभाष्य ॥ सब शब्द मात्र सर्व अर्थ वाले

हैं। शब्द यही ब्रह्म है, वेद है—"शब्दब्रह्म परंब्रह्ममभोमे शाश्वतीतनू"॥ श्री० भा० ६।१६।५१॥ शब्दब्रह्म ब्रह्म मूलं वदन्तः। शब्दब्रह्मवेदः प्रणवो-वा ब्रह्ममूलं ब्रह्मप्रापको वेदजनको वा॥ काशीर० ३।४४॥

हम वैदिक प्रजा वेद प्रमाण माननेवाले हैं जो कुछ भी वेद ने कहा है वह सब हम लोगों का प्रमाण है, जिन ग्रन्थों में प्रत्यक्ष वेद से विरोध हो तो उसमें वेद वचन ही प्रमाण है—

"नित्यानिश्छन्दांसीति यद्यप्यर्थो नित्यो यास्वसौ वर्णानुपूर्वी साऽनित्या तद्भेदाच्चैतद्भवति काठकं, कालापकं, मोदकं, पैप्पलादकमिति॥

॥ महाभाष्य॥

इस प्रकार होने पर भी वर्णानुपूर्वी अनित्य है। उस भेद से ही काठक, कालापक, मोदक, पैप्पलादक आदि शाखा भेद हो गये हैं। यह छन्दरूप ऋचायें नित्य हैं और मंत्रों का अर्थ भी नित्य है, शाखारूप में विकल्पमात्र अनित्य है, जैसा मंत्रद्रष्टा ऋषि को मंत्र भासित हुआ वह उस प्रकार ही पाठ हुआ, वही मंत्र अन्य ऋषि के हृदय में भासित हुआ, वह पाठान्तर है। जैसे काण्वशाखा का ईशा-वास्य ४०६ "विजुगुप्सते" और माध्यन्दिनी शाखा का इशावास्य ४०-६ "विचिकित्सति" पाठान्तर भेद होने पर भी अर्थ एक ही है। इसलिये ही भेद अनित्य है और अर्थ नित्य है।

सर्वास्ता हि चतुष्पादाः सर्वाश्चैकार्थवाचकाः।<br>
पाठान्तरे पृथग्भूता वेदशाखा यथातथा।<br>
प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे स्मृताः॥

॥ वायुपु० ६१।५९।७५॥

इन शाखाओं में पाठान्तरों के सिवाय दूसरा भेद कुछ भी नहीं है। यह वेद नित्य अपौरुषेय अनादि है, इस विषय में भट्टपाद श्री कुमारिल ने तन्त्रवार्तिक में वेदों की अपौरुषेयत्व सिद्धि में अनेक युक्ति तर्कों का उल्लेख करते हुए कहा है—

"आदिवाक्यमपि श्रुत्वा वेदानां पौरुषेयता। न शक्याऽध्यवसातुं हि मनागपि सचेतनैः॥ तेन वेदस्वतंत्रत्वं रूपादेवावगम्यते। किंचिदेव तु तद्वाक्यं सदृशं लौकिकेन यत्॥ तत्रापि छान्दसो मुद्रा दृश्यते सूक्ष्मदर्शिभिः"। जिसका स्पष्ट तात्पर्य है कि वेदों को अनेक रूप में सामने रखने से वे स्वयं अपना अपौरुषेयत्व बता देंगे, किसी युक्त्यन्तर की आवश्यकता न होगी—"उक्तं तु शब्दपूर्वत्वम्"॥ पू० मी० १।१।२९॥ महेश्वर ने ब्रह्मा के हृदय में वेद प्रेरणा की, वही प्रथम वेदवाणी ब्रह्मा के मुख से प्रकट हुई, वही वाणी नित्य वेदरूप अपौरुष वाक्य अनादि है—"अतएव नित्यत्वम्"॥ उ०मी० १।१३।२९॥

मनुष्यकृत न होने से ही यह वेद नित्य अनादि महेश्वर का ज्ञान है।

(२) वैदिक कौन है :—

"श्रोत्रियच्छादसौ लमौ"

यह दो वेद पढ़ने वालों के नाम हैं अर्थात् वेदुआ वा वैदिक कहलाते हैं। इनके छः कर्म बताये हैं। यथा—"इज्याध्ययनदानानि याजनाध्यापने तथा। प्रतिग्रहश्च तैर्युक्तः षट्कर्मा विप्र उच्यते"॥ इनमें याजन, अध्यापन, प्रतिग्रह ये तीन जीविका के साधन हैं; इज्या, अध्ययन, दान ये तीन कर्त्तव्य कर्म हैं, इस प्रकार जिसका आचरण हो वही वैदिक है।

वेदाध्ययन का तात्पर्य है मन्त्री तथा विशिष्ट शाखा या शाखाओं के ब्राह्मण भाग का अध्ययन। वेद को शाश्वत एवं अपौरुषेय माना गया है। सभी धर्मशास्त्रकारों ने वेद को अनादि एवं शाश्वत माना है। संपूर्ण ब्रह्माण्ड वेद से ही प्रसूत है। "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय" इति ॥ पातञ्जल महाभाष्य॥ ब्राह्मणों को। बिना किसी कारण के धर्म, वेद एवं वेदाङ्गों का अध्ययन करना चाहिए वैदिक को वेदाध्ययन परमावश्यक है; क्योंकि यह परमोच्च धर्म है।

मनु० ४।१४७ पूर्व मीमांसा सूत्र जैमिनि ने धर्म को (वेद विहित प्रेरक) लक्षणों के अर्थ में स्वींकार किया है। अर्थात् वेदों में प्रयुक्त अनुशासनों के अनुसार चलना ही धर्म है। धर्म का सबध उन क्रिया संस्कारो से है, जिनसे आनन्द मिलता है। और जो वेदों के द्वारा प्रेरित एवं प्रशंसित है। ( चोदनालक्षणोऽर्थों धर्मः ) पू. मी. १।१।९। धर्म वही है जिससे आनन्द एवं निः श्रेयस सिद्धि हो। ( अथातो धर्मं व्याख्यास्यामः। यतोऽभ्युदय निः श्रेयस सिद्धिः सधर्मः। ( वैशेषिक सूत्र ) वेदाध्ययन का तात्पर्य केवल मन्त्रों को कण्ठस्थ कर लेना ही नहीं, प्रत्युत वास्तविक अर्थ भी समझना और आचरण करना है। ( वेदान्त सूत्र १।३।३०। शंकरा चार्य, याज्ञवल्क्य ३।३०० पर मिताक्षरा ) वैदिक ने षडङ्ग पूर्वक शाखाध्ययन करना है, "(शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः। छन्दो विचित्तिरित्येषः षडङ्गो वेद उच्यते, कल्पः कल्प सूत्रम् )" संहिता, ब्राह्मण, उपनिषद, भाग यह शाखा कहलाती है, वेद का साङ्गअध्ययन कर वेदोक्त संस्कारों का आचरण करने वाला ही वैदिक है। वैदिक विज्ञान का कर्त्तव्य होता है उसने अपने अर्जित ज्ञान के द्वारा समाज कल्याण, राष्ट्र हित, एवम् विश्व बन्धुत्व की स्थापना के लिए उपयोग करना वही वैदिक है।

एक वैदिक "वेद" विकृतियों को कंठस्थीकरण की परंपरा से बाह्य एकाग्रता एवम् बुद्धिचातुर्य की स्थिरता से एवम् पठन् पाठन शक्ति से प्राप्त करता है परन्तु इससे वह 'वेदतत्व' या योगसिद्धि नहीं प्राप्त करता है यथा–

यस्ति त्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदींश्रृणोत्यलकं श्रृणोति नहि प्रवेद सुकृतस्य पन्थाम्॥
ऋ० वे० १०।७१।६

जो मानवमात्र वेदरूप मित्र को त्याग देता है उस मानव को लौकिक मनुष्य रचित ग्रन्थमयी वाणी से परलोक के लिये कुछ भी फल नहीं है, वह जो कुछ पठन पाठन सहित श्रवण, मनन, निदि-

व्यासन करता है सो सब ही व्यर्थ परिश्रम करता हुआ सुनता है, सो सत्कर्म का मार्ग नही जान सकता, अर्थात्–स्वर्ग मोक्ष को नही प्राप्त होता है। अतः जब तक अन्तःकरण की वृत्ति का निरोध नही होता तब तक सारा परिश्रम व्यर्थ है 'अन्तःकरण चतुष्टय कहा है, (मन, बुद्धि, चित्त, अहंकार) और (चित्तवृत्तिर्निरोधोयोगः) पातंजलयो० सू० शाण्डिल्य भक्ति सूत्र। चित्तवृत्ति का 'निरोध' ही 'वेदतत्व' एवं योगसिद्धि की प्राप्ति होना है, इसके लिये साधन की आवश्यकता है, साधन के बिना साध्य नही, साध्य की प्राप्ति के लिये साधन है, साध्य को प्राप्ति होते ही साधन का त्याग है, 'वेद-तत्व' की प्राप्ति का साधन हैं वैदिक धर्मो का आचरण।

(३) वैदिक धर्म क्या है–

धर्म यह अनेकार्थ है, धर्म की व्याख्या करनी भी कठिन है। यहां केवल वैदिक धर्म का ही विचार करना है। साधारणे से मनिपूं प्रत्यय होकर धर्म शब्द बनता है ('धारयतीति धमः' धारणात् धर्म वही है जो धारण किया जाने वाला करने योग्य है। वैदिक धर्म प्रधान माना गया है, वेद में वर्णित आचरणीय धर्म ही 'धर्म' कहलाता है। वेद निर्दिष्ट वेद प्रणीत धर्म को 'वैदिक धर्म' कहा है। (वेदप्रणिहितो धर्मः अधर्मस्तद्विपर्ययः) (वेदेन प्रणिहितो विहितो धर्मः) 'वेद प्रमाग इत्यर्थः अनेनयो वेद प्रमागकः स धर्मो यो धर्मः स वेद प्रमाणक इति। तद्विपर्ययो यो वेदनिषिद्धः सो धर्मः।

'श्रुतिस्मृतिपुराणानां विरोधोयत्र दृश्यते। तत्र श्रौतं प्रमाणं स्यात-योर्द्वैधे स्मृतिर्वरा॥ व्यासस्मृतिः १।४॥ वेद, स्मृति पुराणों का जिस किसी वर्णाश्रम धर्म के विषय में परस्पर विरोध हो तो उस विषय में वेद ही प्रमाण है, स्मृति, पुराण का विरोध हो तो मन्वादि स्मृति प्रमाण है। विरोधेत्व न पेक्षं स्यादसतिह्यनुमानम्॥ पू० मी० १,३,३॥

इस पर कुतुहल वृत्ति-प्रत्यक्षश्रुति विरोधेसति अनपेक्ष श्रुति वाक्य-मेव प्रमाण स्यान्नतुस्मृति वाक्यम्॥

जिन ग्रन्थों में प्रत्यक्ष वेद से विरोध हो तो उसमें वेद वचन ही प्रमाण है, वेद विरुद्ध स्मृति मान्य नही है।

"धर्मस्य शब्द मूलत्वादशब्दमनपेक्ष्यं स्यात्।" ॥ पू० मी० १।३।१ ॥ धर्म के विषय में वेद मुख्य प्रमाण होने से मानने योग्य है और वेद विरोधी मनुष्यों के सुन्दर वाक्यों के रचित परन्तु उन्माद, प्रलाप, इत्यादि दोषों से युक्त हो वह त्यागने योग्य है। वैदिक धर्म के विषय में नचिकेता ने कहा है-ऋग्वेद १० मं० १३४ सू० ७ ऋचा।

नकिं देवा मिनीमसिनकिरायोपयामसि मन्त्रश्रुत्यं चरामसि।
पक्षेभिरपिकक्षेभि रत्नाभि सं भामहे ॥ ऋ० वे० १०।१३४।७ ॥

हे देवताओं! तुम्हारे विषय में हम कुछ भी त्रुटि नहीं करते, किसी भी कर्म में विलंब तथा अश्रद्धा नही करते, मंत्र भाग और ब्राह्मण भाग के अनुसार ही आचरण करते हैं, दोनों हाथों से एकत्रित यज्ञकी सामग्री लेकर स्वर्गीय सोपान मार्ग रूप कर्म का हम सम्पादन करते हैं।

ऐतरेय आरण्यक में कहा है—

"एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्। तस्मान्न प्रमाद्येतन्नातीयात्।
न ह्यत्यन्या यन्पूर्वे ये त्यायस्ते परा बभूवुः ॥ ऐ० आ० २।१।१ ॥

यह वैदिक अनादि मार्ग ही इह-परलोक हितकारी है। वही कर्म-उपासना है, वही सत्यज्ञानमार्ग। ॥ ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद में क्रमशः ज्ञान, कर्म, उपासना, विज्ञान अर्थात्" अनुभव, ब्रह्म प्राप्ति का विषय ही गूढ़ रूप से वर्णित है ॥ इसलिये ही परंपरागत वैदिक मार्ग में शुष्क तर्क प्रमाद इत्यादि न करें और उसका त्याग भी न करें, कारण मुख्यतः चार गोत्र प्रवर्तक भृगु, अंगिरा, वशिष्ठ, कश्यप तथा उनकी सन्तान कवि वृहस्पति, दधीचि, वामदेव आदि ने भी नही त्यागा तो हम उन्ही महर्षियों की ही तो सन्तान हैं, अतः हमें भी नही त्यागना चाहिये। इसी वैदिक मार्ग से चलने में हमारा कल्याण है। जिन्होंने वैदिक मर्यादा का उल्लंघन किया, त्याग किया

वह सब अनार्य होकर हीन योनियों में उत्पन्न हो महान् कष्ट का अनुभव कर पराभव को प्राप्त हुए। संक्षेप में वैदिक धर्म का सारांश क्या है—सर्वदा वैदिक धर्म की सेवा करनी अर्थात् आचरण करना, प्राणियों की हिंसा न करनी, साधु पुरुषों की सेवा करनी, काम, क्रोध, लोभादि शत्रुओं को जीतना, दूसरों के गुण-दोष वर्णन का त्याग करना, सत्य बोलना, अग्नि, सूर्य इत्यादि की उपासना करनी, शिव, वासुदेवादि देवताओं का भजन, पूजन, स्मरण करना। देह, अस्थि, मांस, रुधिर में अहंकार का त्याग करना, स्त्री-पुत्रादि में ममता का त्याग करना, संसार को क्षणभंगुर देखना, वैराग्यभाव से योग में चित्त लगाकर योगनिष्ठ कर्तव्यनिष्ठ, होना चाहिये, इत्यादि धर्मों में चित्त लगाकर शीलवान्, सदाचरणवान् होना चाहिये।

मानव यदि अपना उत्थान चाहता है तो इसी वैदिक मार्ग का अवलम्बन लेकर चलना चाहिये। "यद्वै किंच मनुरवदत्तद् भेषजम्" ॥ तै० शा० २।२।१०।२ ॥ जो कुछ भी मनु ने प्रजा के लिये वैदिक धर्म कहा है वह सब ही सुख-शान्ति-कल्याणकारी है।

## (४) वैदिक राजनीति—

वैदिक राजनीति का स्वरूप कैसा है, देखिये—अथर्ववेद ७।१।१२ सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने। येनासङ्गच्छा उपमास शिक्षाच्चारु वदानि पितरः सङ्गतेषु। विद्म ते सभेनाम नरिष्टा नाम वा असि ॥ ये ते के च सभासदस्ते मे सन्तु सवाचसः ॥२॥ एषामहं समासीनानांवर्चो विज्ञानमाददे। अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥ ३ ॥ यद्वो मनः परागतं यद्बद्धमिह वेह वा ॥ तद्व आवर्तयामसि मयि वो रमतां मनः ॥ ४ ॥

**'सभा विदुषां समाजः'**

इस सूक्त में सभा कैसी होनी चाहिये इसका वर्णन है। सभा दो प्रकार की होती है, ग्रामसमिति और राष्ट्रसभा। उसी प्रकार प्रांत सभा, नगर सभा होती है। यह सभायें ग्राम, नगर, प्रांत, राष्ट्र

का कार्य करती हैं। शासक को (राजा ने) उनका पुत्रवत् पालन करना चाहिये। दोनों सभायें एकमत होकर राष्ट्र का कार्य करें। सभासद सत्यवादी होना चाहिये, योग्य सम्मति देने वाले हों, राजा को भी उनके ऊपर विश्वास करना चाहिये, सभा का नाम नरिष्टा है "नरिष्टा नाम वै असि"। नरिष्टा का दो अर्थ है–एक "नरैः इष्टा" नर अर्थात् नेता मनुष्यों का इष्ट है, प्रिय है। सभा को मनुष्य चाहते हैं क्योंकि इस सभा द्वारा ही जनता के इष्ट राजा को विदित हो जाते हैं। "न-रिष्टा" अर्थात् जो किसी का नाश नहीं करती और जिसका नाश कोई नहीं कर सकता, सभा के कारण प्रजा का नाश नहीं होता है और जनमत के अनुसार चलने वाले राजा की भी सुरक्षा हो जाती है। इस प्रकार "राष्ट्रसभा" सूक्त में वैदिक राज्य शासन का सिद्धांत वर्णित है, यह आज्ञा वैदिक धर्म की है और वैदिक धर्म के अनुसार आचरण होने से ही राष्ट्र का कल्याण है।

"चत्वारो वेद धर्मज्ञाः पर्षत् त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः॥ या० स्मृ० १।९। इति। "यद् आर्याः प्रशंसन्ति स धर्मः" आपध० १।२०।७ इति॥

**(५) सामाजिक समभाव व्यवहार वा एकता–**

समाज में किस प्रकार व्यवहार करने से समाज में अक्षुण्ण एकता और देश की अखण्डता बनी रह सकती है, इसके लिये देखिये अथर्ववेद—६।७।६४।

सं जानीध्वं सं पृच्यध्व सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे संजानाना उपासते॥ १॥
समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम्।
समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम्॥ २॥
समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥ ३॥

समान स्थान प्राप्त करो, समानता से एक दूसरे से सम्बन्ध जोड़ो, मन भी समानता से युक्त हो, विचार समान हो, सभा सबके लिए समान हो, समान व्रत हो, समान चित्त हो, एक मत हो, सब कार्य में भाग लो, सङ्कल्प एक हो, हृदय एक हो ॥ १–३ ॥ समानी प्रपा सह वोन्नभागः समाने योक्त्रे सह वो युनज्मि ॥ अ० ३।६।३०।६।

तुम्हारे अन्न जल का भी भाग एक हो, एक ही सम्बन्ध में जुटकर एक ही साथ ईश्वर की उपासना हो, जिस प्रकार चक्र के आरे नाभि में जुड़े होते हैं, उसी प्रकार समाज में एक दूसरे के साथ मिल-जुल कर रहो, एक दूसरे की मदद करो। "यदन्तरं तद्बाह्यं यद्बाह्यं तदन्तरम्।" जो भाव भीतर हो वही बाहर हो, जो भाव बाहर हो वही भीतर हो, यही एकता एवं समभाव है। अ० २।५।४।४

## (६) शिक्षा-दीक्षा—

कृष्ण यजुर्वेद तैत्तिरीय शाखा के शिक्षादि पञ्चोपनिषद् यथा— ॥ १ ॥ शिक्षावल्ली ॥ २ ॥ ब्रह्मानन्द वल्ली ॥ ३ ॥ भृगुवल्ली ॥ ४ ॥ नारायणोपनिषत् ॥ ५ ॥ चित्ती।

यहां शिक्षावल्ली का कुछ अंश उद्धृत किया जा रहा है। आचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान् मा प्रमदः सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम् भूत्यै न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि। नो इतराणि। श्रद्धया देयं। अश्रद्धया देयं। श्रिया देयं। ह्रिया देयं। भिया देयं। संविदा देयं। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनं। एवमुपासितव्यम्। एवमु चैतदुपास्यं। इति शिक्षोपनिषत्।

गुरु अपने शिष्य को सर्वश्रेष्ठ कर्माचरण के लिये योग्य बनने के लिये शिक्षा देकर शिक्षित करता है—सदा सर्वदा सत्य बोलो, धर्माचरण करो, अध्ययन करने में असावधान न रहो, भूल न करो,

सत्य और धर्म में असावधानी न करो, वेद शास्त्र प्रवचन में असावधान न रहो, देव-पितृ कार्य पालन में असावधानी न करो, माता, पिता, गुरु की सेवा करो, उनकी आज्ञा का पालन करो, अतिथि, अभ्यागत, बड़े लोगों का आदर-सत्कार करो, जो कार्य करने योग्य हो उन्हीं का आचरण करो, सेवन करो, जो अकार्य कार्य हैं, उनका आचरण न करो, उनका सेवन न करो। न्यायोपार्जित स्ववृत्ति से कमाये गये धन से कुछ राष्ट्र की सुरक्षा हेतु, समाज के लिये, जनता के लिये दान करो, कारण "दानं वितरणं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः" वितरण करना—बांटना ही दान है। यही आदेश है। यही उपदेश है। यही अनुशासन अर्थात् आज्ञा है, यही एक गुरु की अपने शिष्य के लिये महान् शिक्षा एवं दीक्षा है।

गुरुकुल से स्नातक होने के उपरान्त गुरु के द्वारा ज्ञानदीक्षा प्राप्त कर समाज सेवा करने के लिये गुरु आदेश देता है। इस प्रकार दीक्षित होकर "दीयते विमलं ज्ञानं क्षीयते कर्मवासना" समस्त वासना का क्षय होकर ज्ञान की प्राप्ति होना यही दीक्षा है, और वह एक सामाजिक वनता है "समाजं रक्षन्ति सामाजिकाः" समाज कल्याण की जो भावना रखता है वही सामाजिक है। यही वैदिक शिक्षा-दीक्षा है।

(७) उपसंहार—

आज प्रत्येक मानव कष्ट, अभाव, अशान्ति का अनुभव कर रहा है। प्रत्येक मानव का हृदय उद्वेलित, आंदोलित, उद्विग्न, अस्थिर हो रहा है। आखिर इसका कारण क्या है? हमने भारतीय संस्कृति खो दी है। हमारा सदाचार सद्विचार नष्ट हो गया है, विवेकशक्ति समाप्त हो गई है। मानव मानवता एवम् धर्म को भूल गये हैं, उन्मत्त, भ्रान्त होकर विमार्गग हो रहे हैं। यम-नियमादि, आहार, विहार, व्यवहार, विकृत हो सारे संसार की स्थिति विकृत हो गयी है, ईति भय चारों तरफ व्याप्त हो रहे हैं—"अतिवृष्टि, अनावृष्टि, शलभ, मूषक, शुक, स्वचक्र, परचक्र" क्रमशः यह सात

ईतियां कही हैं "शाम्यन्तु घोराणि शाम्यन्त्वीतयः" समाप्त हो गया है। मनुष्यमात्र ने नीति का त्याग कर दिया है, नैतिकता खो अनैतिक बनता जा रहा है, जिसका स्पष्ट परिणाम है "नृणां नीतिपरित्यागात् विपाकः स्युर्भयंकराः" नीति का त्याग करने से मनुष्यों को भयंकर फल प्राप्त होते हैं। इस आपद्-विपद् काल से एवम् संकटकालीन स्थिति से सम्हलने का कुछ उठकर खड़े होने का साहस, केवल मात्र भारतीय वैदिक संस्कृति की सुरक्षा से ही हो सकता है। आज वैदिक धर्म लुप्तप्राय हो रहे हैं, अतः इनके प्रचार, प्रसार एवं आचरण से ही हम संकटमुक्त हो सुख-शान्ति प्राप्त कर सकते हैं और राष्ट्र का कल्याण हो सकता है। वेद राष्ट्र में सुख, शान्ति, कल्याण के विषय में क्या कहते हैं देखिये—

अथर्ववेद-१९।७।६८, १९।७।६२, १९।३।४१, ७।६।७२ क्रमशः

वेदोक्त कर्म, प्रियत्व, कल्याण, सुख—

वेद का आदेश उपदेश व्यष्टि के लिये नहीं समष्टि के लिए होता है।

॥ १ ॥ अव्यसश्च व्यचसश्च विलं विष्यामि मायया।

ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे ॥

हमारा हृदय अज्ञानता से युक्त होने से कर्तव्याकर्तव्य का विचार नहीं रहता अतः हम जीव ईश्वर के द्वारा वेदों का ज्ञान प्राप्त कर ज्ञानयुक्त वेदोक्त कर्म करें।

॥ २ ॥ प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ॥

प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥

मुझे देवताओं में राजाओं में प्रिय बनाओ, और उसी प्रकार मैं देखनेवालों को प्रिय रहूं। शूद्र और आर्यों में प्रिय रहूँ।

॥ ३ ॥ भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे।

ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ॥ १ ॥

ऋषियों ने जिस तप-व्रतादि से कल्याण की इच्छा कर स्वर्गादि प्राप्त किया, उसी से राष्ट्रबल, ओज प्राप्त हुआ, वही राज्य, सामर्थ्य तेज देवता हमें प्रदान करें।

॥ ४ ॥ शं नो वातो वातु शं नस्तपतु सूर्यः।

अहानिशं भवन्तु नः शं रात्री प्रतिधीयतां शमुषा नो व्युच्छतु ॥१॥

दिन रात्रि, वायु, सूर्य, उषा, हमारे लिये सुखमय हों, सुख देने वाले हों, हमारा जीवन सुख, शान्ति, कल्याणमय हो, हमारा राष्ट्र समृद्धि को प्राप्त हो।

यही वेदतत्त्व है, एवम् वैदिक धर्म है।

श्रीसीतारामचन्द्र रटाटे स्मृति ग्रन्थमाला के अन्तर्गत
कुछ पुस्तकें यथासम्भव शीघ्र ही प्रकाशित होंगी–

१––अथाज्यतंत्रम्

२––नवग्रहशान्तियागः

३––शिक्षादिचतुष्टयम्

४––गणसंहिता

५––महाशान्तिः

६––मधुपर्क ( भाष्यसहित )

७––प्रत्यङ्गिराकल्प ( शौनकशाखीय )

८––स्वस्तिपुण्याहवाचनम् ( सर्वशाखीय समालोचनात्मक )

९––वैदिक सिद्धप्रत्यङ्गिरास्तोत्रम् ( प्रेस में )